# वीर-त्थुई

जैनधर्म-दिवाकर, जैनागम-रत्नाकर, साहित्यरत्न,

जैन-मुनि

१००८ उपाध्याय [illegible] जी महाराज

प्रकाशक

चौधरी बसन्तामल जैन

फरीदकोट (स्टेट)

प्रथमावृत्ति ७५० ] १९४२ [ मूल्य सदुपयोग

# भूमिका

व्याकरण नाम नितान्तमेव नीरसम् । रससिद्धैः कवीश्वरैर्बहुधा वैयाकरणानां स्वाभाविकी शुष्कता परिहासपात्रतां नीनेति नापरोक्षं प्रेक्षावताम् । सितशर्करोपबृंहितानि कटुकौषधानि यथा रोगिजनमनोऽभिनन्दनीयानि भवन्ति, न तथा तद्रहितानि गुडूचीकुटजपाकादीनि भेषजानि । मन्ये, इदमेव विमृश्य श्रीमदाचार्य्यवर्य्यैरार्य्यहेमचन्द्रपादैर्विरचितं द्व्याश्रयाभिध काव्यम्, येन हि सुधासिन्धुरिव संवृत्तः शब्दागमोऽपि सुखावगाहः सुस्वादुश्च ।

शब्दसूत्राणां सन्त्रासकरीमालोक्य जटिलतां भवन्ति कान्दिशीकाः कुशाग्रबुद्धयोऽपि, जायन्तेऽनेडमूका मेधाविनोऽपि, नाल्पाऽस्ति संख्या तादृशानां ये नाम पङ्कप्रक्षालनादिव, तप्तलौहगोलकालिङ्गनादिव, हालाहलपानादिव, वनवराहदंष्ट्राघर्षणादिव, विद्युद्वल्लीविलसनादिव, बिभ्यति व्याकरणात् । हिमकणनिकरमिव कमलिनीषु, भसितप्रसारणमिव शीशकेषु, मसीनिचयमिव च दीपशिखासु, कुमाराणां किशोराणाञ्च शेमुषीषु प्रभवति व्याकरणं म्लानिमात्रमापादयितुम् ।

इत्थम्भूते व्यतिकरे वयमर्धमागध्यां वीरस्तुतिमुखेन प्रकृति-प्रत्यय-लोप-विकार-आगमादीनि यत्किञ्चिन्निदर्शयितुकामाः प्रक्रमामहे निकामम् । आशास्महे अस्माकमयमारम्भः 'बहुजन-हिताय बहुजनसुखाय' च स्यात् । व्याकरणस्य शुष्काणां परुषाणाञ्च विषयाणामनायासेनैव अवबोधनाय नान्यः कश्चिदुपायः सद्यः प्रीतिकर इति नूत्नोऽयं नः प्रयत्नः ।

औचित्यानौचित्ययोर्निकषग्रावा तु मीमांसकानां (समालोचकानां) मनीषैव भवतीति कृत कौतूहलेन, यतो हि प्रार्थिता अप्रार्थिताश्चापि ते रत्नमन्विष्यन्त्येव, अन्विष्य च रत्न शाणोल्लीढं परीक्षन्त एव । सत्यमेतत् विदुषां परितोष एव कस्यापि ग्रन्थस्य कृतित्वे प्रमाणम् । कृशकलेवरेण पुस्तकेनैतेन स्तोकमपि चेत्सुजनानां मनोरञ्जनं, भविष्यामो वयं कृतकृत्याः सम्भावितात्मानश्च ।

अत्र हि प्रथमं तावत् भगवतो महावीरस्य स्तोत्रसूत्राणि अर्धमागधीभाषायाम् तदनन्तरञ्च गीर्वाणवाण्यां तेषां छायाः सन्ति सन्निवेशिताः । अधस्तात् प्रत्यन्त (पाद) टिप्पणीषु यथासंख्यमभिप्रेतानि शाकटायनसूत्राणि सवृत्ति सोदाहरणञ्च समुल्लिखितानि, तदनु च समानार्थाना पाणिनीयानामपि सूत्राणामुपयोगः कृतः ।

एतेन नीरसेऽपि विषयेऽस्मिन् सरसतां रोचकतां चमत्कृतिञ्च समुद्भावयितुमस्माकमयमुद्यमः सर्वोत्तमो वा अद्वितीयो

वा अभूतपूर्वो वा इति न वयमात्मानं बृहस्पतेः पदवीमारोपयामः। परन्तु स्निग्धमनोभिरस्माभिः समुपस्थापितोऽयं ज्ञानप्रदीपो भासुरमपि भासयतु दीपावलिवलयितमार्षसाहित्यसदनम्, शिशिरयतु रुचिरेण रोचिषा चक्षूंषि विचक्षणानाम्, भवतु च भव्याय भावुकानामित्यलम्पल्लवितेन।

**गच्छतः स्खलनं क्वापि, भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः॥**

लुधियाना
(पंजाब)

जैनमुनिः उपाध्यायः आत्मारामः

पयवक्कप्पमाणाणं आगरं णिम्मलं वओ ।
णिग्गयं जस्स सुत्तेसु तं वंदे जिणसासणं ॥

अणेकंतत्थसंजुत्ता सद्दसत्थप्पदीवणी ।
अत्तारामेण मुणिणा वीरत्थुई विरच्चइ ॥

॥ णमोऽत्थु णं समणस्स भगवओ महावीरस्स ॥

# वीर-त्थुई

१ महावीर ! तुम्हाणं णाणं जहा तिण्हं वि लोगाणं पगासयं, तहेव कसिणस्स वि सद्दाणुसासणस्स पगासयाइं संति तेरस एव सुत्ताइं ।

[ महावीर ! युष्माकं ज्ञानं यथा त्रयाणामपि लोकानां प्रकाशकं तथैव कृत्स्नस्यापि शब्दानुशासनस्य प्रकाशकानि सन्ति त्रयोदश एव सूत्राणि । ]

१ शा० अइउण् १, ऋक् २, एओङ् ३, ऐऔच् ४, हयवरलञ् ५, ञमङणनम् ६, जबगडदश् ७, झभघढधष् ८, खफछठथट् ९, चटतव् १०, कपय् ११, शषसअं ≍क ≍प र् १२, हल् १३, इति वर्णसमाम्नाय: ।

पा० अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १४ हल् १४ इति माहेश्वराणि सूत्राणि अणादि-सञ्ज्ञार्थानि ।

**२ णिव्वाणपडिवण्णस्स अप्पणो कम्मं अणुवओगि होइ जहा वागरणे 'इत्' अप्पओगि दीसइ ।**

[ निर्वाणप्रतिपन्नस्य आत्मनः कर्म्म अनुपयोगि भवति यथा व्याकरणे इत् अप्रयोगि दृश्यते । ]

**३ समण भगवं महावीर! तव सासणे अप्पा णाणदंसणवीरियाणं बोहओ हवइ जहा अण् पच्चाहारो तिण्हं सराणं बोहओ ।**

---

२ शा० अप्रयोगीत् १।१।५।

इह उपदिश्यमानो वर्ण समुदायो वा यो लौकिकशब्दप्रयोगे न दृश्यते स इत्संज्ञो भवति । एधि–एधते । अइउण्–अण् । ट्वेपृङ्–वपथु । डुकृञ–कृत्रिमम् ।

पा० उपदेशेऽजनुनासिक इत् १।३।२।

हलन्त्यम् १।३।३।

न विभक्तौ तुस्माः १।३।४।

आदिर्ञिटुडव १।३।५।

ष प्रत्ययस्य १।३।६।

चुटू १।३।७।

लशक्वतद्धिते १।३।८।

तस्य लोप १।३।९।

३ शा० सात्मेतेत् १।१।१।

इता सहोच्चार्यमाणो वर्ण समुदायो वाऽऽत्मन प्रभृत्या तस्मादितो व्यवस्थिनाना संज्ञा भवति आत्मना सह । अण् अक् अच् हल् सुप् सुट् तिङ् त्तम् कण् ।

पा० आदिरन्त्येन सहेता १।१।७१ ।

[ श्रमण भगवन् महावीर ! तव शासने आत्मा ज्ञानदर्शनवीर्याणां बोधको भवति यथा अण् प्रत्याहारस्त्रयाणां स्वराणां बोधकः । ]

**४ खीणावरणं मइ-आइनाणं ससवग्गस्स णावयं हवइ, जहा वागरणे 'उदित्' वण्णो ससवग्गं पण्णवेइ ।**

[ क्षीणावरणं मत्यादिज्ञानं स्वस्ववर्गस्य ज्ञापकं भवति, यथा व्याकरणे 'उदित्' वर्णः स्वस्ववर्गं प्रज्ञापयति । ]

**५ भगवं ! जावमेत्तं भवयाणं आणापालणं कीरइ तावमेत्तमेव फलं उप्पज्जेइ जहा सद्दसत्थे तकारस्स अणुबंधस्स लोवेन ।**

[ भगवन् ! यावन्मात्रं भवतामाज्ञापालनं क्रियते तावन्मात्रमेव फलमुत्पद्यते यथा शब्दशास्त्रे तकारस्य अनुबंधस्य लोपेन ।]

**६ सवण्णु ! तुब्भेहिं जिणकप्पट्ठिई थेरकप्पट्ठिई परिहारविसुद्धिकप्पट्ठिई य पण्णत्ता, इमासं तिण्हं ठिईणं जावमेत्तं**

---

४ शा० उता स्व १।१।२।

उकारेण इता सह उपादीयमानो वर्ण स्वस्ववर्गस्य आत्मना सह संज्ञा भवति—कु चु टु तु पु ।

पा० अणुदित्सवर्णस्य चाप्रत्यय. १।१।६९।

५ शा० तेयान् १।१।३।

तकारेण इता सह उपादीयमानो वर्ण इयान यावन्मात्र उपात्त तावन्मात्र एव असौ वेदितव्य । अत् इत् उत् ऋत् ।

पा० तपरस्तत्कालस्य १।१।७०।

६ शा० भाव्योऽग् १।१।४।

**पालणं कज्जेइ लाहो वि तावमेत्तं हवइ जहा विहेज्जा पच्च-यविआरागमा ।**

[ सर्वज्ञ ! युष्माभिः जिनकल्पस्थितिः स्थविरकल्पस्थितिः परिहारविशुद्धिकल्पस्थितिश्च प्रज्ञप्ता., आस्मा तिसृणां स्थितीनां यावन्मात्रं पालनं क्रियते लाभोऽपि तावन्मात्रं भवति यथा विधेयाः प्रत्ययविकारागमाः । ]

**७ जया अप्पा सिद्धेहिं सद्धिं तुल्लट्ठाणो तुल्लपयत्तो य हवइ तया सो वि तेसिं सगो जायेइ, जहा सद्दाणुसासणे ।**

[ यदा आत्मा सिद्धैः सार्द्धं तुल्यस्थानः तुल्यप्रयत्नश्च भवति तदा सोऽपि तेषां स्वको जायते यथा शब्दाऽनुशासने । ]

**८ संसारे परिब्भमंतस्स अप्पणो एव ताहिं ताहिं गईहिं वा जोणीहिं वा संधी होइ णो उण विरामभावन्नाणं सिद्धाणं, सद्दसत्थम्मि वि एवमेव दीसेइ ।**

---

भाव्यो विधेय प्रत्ययविकारागमरूप अ[illegible]को वर्ण इयानेन वेदितव्य । भिक्षु अस्मै अष्टाभि ल्विना ।

अणुदित्सवर्णस्य चाप्रत्यय १।१।६९।

७ शा० स्वस्थानास्यैक्ये १।१।६ ।

स्थान कण्ठताल्वादि आस्ये भवमास्य (स्पृष्टादि प्रयत्नपचक) एतद् द्वय यस्ययेन तुल्य तन्मिथ स्वसज्ञक सवर्णमज्ञक भवति–क ख ग घ ङ इति पञ्चापि सवर्णा ।

पा० तुल्यास्यप्रयत्न सवर्णम् १।१।९।

८ शा० न १।१।७० ।

इत ऊर्ध्व यद् वक्ष्यते तद् विरामे वर्तमानस्य न भवति। धर्मम् ।

[संसारे परिभ्रमत. आत्मनः एव ताभिः ताभि गतिभिः वा योनिभिः वा सन्धिर्भवति न पुनर्विराममापन्नानां सिद्धानाम्, शब्दशास्त्रेऽपि एवमेव दृश्यते।]

९ अप्पा जया अप्पणो परेण कम्मसंजुत्तेण केणावि संधिं कुणेइ तया सो विकारमावज्जेइ, से जहा सद्दागमे 'एच्' पच्चाहारो।

[आत्मा यदा आत्मनः परेण कर्मसंयुक्तेन केनापि संधिं करोति तदा स विकारमापद्यते तद् यथा शब्दागमे एच् प्रत्याहारः।]

१० जया अप्पा णाणपरंमुहो होऊण पोग्गलं संगच्छेइ तया एसो जायेइ सत्तहीणो जहा 'इक्' पच्चाहारस्स दसा दीसेइ।

[यदा आत्मा ज्ञानपराङ्मुखो भूत्वा पुद्गलं संगच्छते

पा० परः सन्निकर्षः संहिता १।१।१०९।

विरामोऽवसानम् १।१।११०।

९ शा० एचोऽच्ययवायाव् १।१।६९।

एच स्थाने यथासंख्य अय् अव् आय् आव् इत्येते आदेशा भवन्ति अचि परे। नयनम। लवनम्। रायौ। नावौ।

पा० एचोऽयवायाव ६।१।७८।

१० शा० अस्वे १।१।७३।

इक स्थानेऽस्वे अचि परत तदासन्नो यस्यादेशो भवति। दध्यशान। मध्वपनय। पित्रर्थ। दध्यलृतकाय दीयताम्।

पा० इको यणचि ६।१।७७।

तदा एष जायते सत्त्वहीनः (स्वत्वहीनः) यथा इक् प्रत्याहारस्य दशा दृश्यते । ]

**११ एत्थ सो एव आढिज्जेइ जो जस्स गुणाईहिं आसन्नो होइ, वागरणेवि एवमेव दीसेइ ।**

[ इह स एव आद्रियते यः यस्य गुणादिभिः आसन्नो भवति, व्याकरणेऽपि एवमेव दृश्यते । ]

**१२ पोग्गलसंसग्गमावन्नो जीवो स-सरूवाउ चवेइ णावि चवेइ चित्तस्स दढभावेण अदढभावापेक्खाए वा, जहा सद्दागमे ।**

[ पुद्गलसंसर्गमापन्नो जीवः स्वस्वरूपात् च्यवति नापि च्यवति चित्तस्य दृढभावेन अदृढभावापेक्षया वा । ]

**१३ वंकं दट्ठूण उज्जू वा वंको वा सव्वो पायेण लहू होइ जहा वायरणे ।**

---

११ शा० आसन्न १।१।७ ।

इह आसन्न-अनासन्नप्रसंगे स्थानगुणप्रमाणादिभि यथास्वमासन्न एव विधिरुपात्तो वेदितव्यो लोकाग्रम्, मुनीन्द्र ।

पा० स्थानेऽन्तरतम १।१।५० ।

१२ शा० ह्रस्वो वाऽपदे १।१।७४ ।

इक. स्थानेऽस्वे अचि परे ह्रस्वादेशो वा भवति । नदि एषा । नद्येषा ।

पा० इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२७ ।

१३ शा० ऋत्यक १।१।७५ ।

अकः स्थाने ऋति-ऋकारे ऌकारे च अचि परे ह्रस्वो वा भवति । मह ऋषि —महर्षि । धूलिऌतः—धूल्ऌत ।

[ वक्रं दृष्ट्वा ऋजुः वा वक्रो वा सर्वः प्रायेण लघुः भवति, यथा व्याकरणे । ]

**१४ जीवो जया सएहिं नाण-दंसण-चरित्तेहिं संगइं करेज्जा तया धुवं एसो उण्णओ भवेज्जा, सद्दसासणे वि तहेव दीसेइ ।**

[जीवो यदा स्वकैः ज्ञान-दर्शन-चारित्रैः संगतिं कुर्यात् ( करोति वा ) तदा ध्रुवमेष उन्नतो भवेत् (भवति वा) शब्द-शासनेऽपि तथैव दृश्यते । ]

**१५ उजू अप्पा वंकेण संगओवि पगुणो हवइ वाग-रणेवि तहेव ।**

[ ऋजुः आत्मा वक्रेण संगतोऽपि प्रगुणो भवति, व्या-करणे अपि तथैव । ]

---

पा० ऋत्यक ६।१।१२८ ।

१४ शा० दीर्घ १।१।७७।

अकः स्थाने अचि परे परेण अचा सहितस्य नित्यं दीर्घादेशो भवति । दण्डाग्रम् । मुनीन्द्रः । मधूदकम् ।

पा० अकः सवर्णे दीर्घः ६।१।१०१।

१५ शा० इक्येङर् १।१।८२।

अवर्णस्थाने इकि परे परेण अचा सहितस्य यथासंख्यमेङर् इत्येते आदेशा भवन्ति । देवेन्द्र । मालेयम् । गधोदकम् । महर्षि ।

पा० आद्गुणः ६।१।८७ ।

उरण् रपरः १।१।५१ ।

**१६ जया उज्जू अप्पा वुड्ढेहिं सद्धिं संगच्छेइ तया सोवि वुड्ढो जायेइ, जहा सद्दागमे ।**

[ यदा ऋजुः आत्मा वृद्धैः सार्द्ध संगच्छते तदा सोऽपि वृद्धो जायते, यथा शब्दागमे । ]

**१७ उवसग्गाणं संनिहाणम्मि वि महप्पाणो वुड्ढिमेव गच्छेज्जा जहा सद्दाणुसासणे ।**

[ उपसर्गाणां सनिधानेऽपि महात्मानः वृद्धिमेव गच्छन्ति यथा शब्दानुशासने । ]

**१८ जिणेस ! अवुड्ढिमन्ताणं मज्झे ठिओवि तुमं सया वड्ढणसीलो एव लक्खिज्जसि, सद्दागमे वि तहेव ।**

[ जिनेश ! अवृद्धिमतां मध्ये स्थितोऽपि त्वं सदा वर्धनशील एव लक्ष्यसे, शब्दागमेऽपि तथैव । ]

१६ शा० एजूच्यंच १।१।८३ ।

अवर्णस्य स्थाने एचि एजादेशे च परे साच तदासन्न एजादेशो भवति । तवैषा । खट्वैषा ।

पा० वृद्धिरेचि ६।१।८८।

१७ शा० प्रस्योढोढघूहैषैष्ये १।१।८४।

प्रशब्दस्य यदवर्णं तस्य स्थाने ऊढ ऊढि ऊह् एष एष्य इत्येतेषु एच आसन्न एजादेशो भवति । प्रौढः । प्रौढि । प्रौह् । प्रैष । प्रैष्य ।

पा० प्रादूहोढोढ्येषैष्येषु (वार्तिक) ३६०५ ।

१८ शा० स्वैरस्वैर्यक्षौहिण्याम् १।१।८५।

स्वैर स्वैरिन् अक्षौहिणी—इत्येतेषु अवर्णस्य साच ऐजादेशो भवति । स्वैर । स्वैरी । अक्षौहिणी ।

१९ विरियहीणो अप्पा जं कमवि परं संगच्छेइ तस्सेव रूवं पडिवज्जेइ, एमेव सद्दाणुसासणम्मि वि।

[ वीर्यहीनः आत्मा य कमपि परं संगच्छते तस्यैव रूपं प्रतिपद्यते, एवमेव शब्दानुशासनेऽपि । ]

२० समासे वुड्ढी एव हवइ न उणो हाणी, जहा वागरणे।

[ समासे वृद्धिरेव भवति न पुनः हानिः यथा व्याकरणे । ]

२१ अणगारो होऊण वि जो पुव्वा णाई सरइ सो तेसिमेव रूवमावज्जेइ, सद्दसत्थम्मि वि एमेव।

---

पा० अक्षादूहिन्यामुपसंख्यानम् । वा० ३६०४।

पा० स्वादीरेरिणो । वा० ३६०६।

१९ शा० ओमाङि पर १।१।८६।

अवर्णस्य स्थाने ओ शब्दे आङादेशे च परे साच परोऽजादेशो भवति। तवोकार । कोमित्यवोचत् ।

पा० ओमाङोश्च ६।१।९५।

२० शा० आर् तृतीयाया ऋते १।१।८९।

तृतीयान्तसम्बन्धिनोऽवर्णस्य स्थाने ऋतशब्दे परे साच आर् आदेशो भवति समासे। सुखेन ऋत —सुखार्त ।

पा० ऋते च तृतीयासमासे। वा० ३६०७।

२१ शा० पदान्तेऽस्येङ १।१।९४।

पदान्ते य एङ् तस्य अकारे परे साच एङ् भवति। तेऽत्र ।

पा० एङः पदान्तादति ६।१।१०९।

[ अनगारो भूत्वापि यः पूर्वाः ज्ञाती' स्मरति स तासामेव रूपमापद्यते, शब्दशास्त्रेऽपि एवमेव । ]

**२२ महन्ताणं संसग्गम्मि वियारो वि णो हाणिप्पयो, जहा वायरणे ।**

[ महतां संसर्गे विकारोऽपि न हानिप्रदः यथा व्याकरणे । ]

**२३ भगवं ! संतेसु वि विकारकारणेसु तुम्हे पगइभावं (सभावं) न परिच्चयेह, सद्दाणुमासणे वि एमेव दीसेइ ।**

---

२२ शा० इन्द्रे १।१।९७।

गोशब्दस्य पदान्ते वर्तमानस्यैङ इन्द्रशब्दस्थे अचि परे अव इत्यादेशो भवति । गवेन्द्र ।

पा० इन्द्रे च ६।१।१२४।

२३ शा० गित' १।१।१००।

गानुबन्धस्य अचि परे तन्निमित्त यत्प्राप्नोति तन्न भवति । मुनी इमौ । साधू एतौ । पचेते अत्र । पचावहे अत्र आवाम् ।

शा० चादेरचोऽनाङ' १।१।१०१ ।

चादिरसत्त्ववाची, आङ् वर्जितो योऽच् तस्य अचि परे तन्निमित्त यत्प्राप्नोति तन्न भवति । अ अपेहि । इ इन्द्र पश्य । उ उत्तिष्ठ. आ एवं न् मन्यसे ।

शा० ओत. १।१।१०२ ।

चादेरोकारान्तस्य अचि परे यत्प्राप्नोति तन्न भवति । अहो इदम् । उताहो एवम् । अथो अस्मै । नो इन्द्रियम् ।

पा० ईदूदेद्द्विवचन प्रगृह्यम् १।१।११ ।

अदसो मात् १।१।१२।

[ भगवन् ! सत्स्वपि विकारकारणेषु यूयं प्रकृतिभावं (स्वभावं) न त्यजथ, शब्दानुशासनेऽपि एवमेव दृश्यते ।]

**२४ सुद्धप्पा संजोगसहिअं अप्पाणं दट्ठूण वि राग-दोसेहिं णो लिप्पेइ, वागरणेवि तहेव ।**

[ शुद्धात्मा सयोगसहितं आत्मानं दृष्ट्वापि रागद्वेषैर्न लिप्यते, व्याकरणेऽपि तथैव । ].

**२५ तुम्हाणं संतभावं अतिसेसे य अणुभविय पाइय-जणोवि समिद्धो होइ, सद्दाणुसासणे वि एवामेव दीसेइ ।**

[ युष्माकं शान्तभावमतिशेषांश्चानुभूय प्राकृतजनोऽपि समृद्धो भवति, शब्दानुशासनेऽपि एवमेव दृश्यते । ]

**२६ चउसु गइसु भमंतो जीवो पंचमीं गइं पाऊण तारिसो एव होइ से जहा सद्दागमे ।**

निपात एकाजनाङ् १।१।१४ ।

ओत् १।१।१५ ।

२४ शा० न सयोगे १।१।११९ ।

सयोगे परे अच. स्थाने द्वे रूपे न भवत' । इन्द्र. । चन्द्रः । कृत्स्नम् ।

पा० त्रिप्रभृतिषु शाकटायनस्य ८।४।५० ।

२५ शा० अजाङ्माङ १।१।१२६ ।

अच आङो माङश्च अव्ययादुत्तरस्य छकारस्य द्वे रूपे नित्य भवत' । इच्छति । म्लेच्छ । आच्छिनत्ति । माच्छिदत् ।

पा० छे च ६।१।७३ ।

आङ्माङोश्च ६।१।७४ ।

२६ शा० हलोऽनुवासिकेऽनुनासिक स्व' १।१।१०६ ।

[चतसृषु गतिषु भ्रमन जीवः पचमीं गातिं प्राप्य तादृश एव भवति, तद्यथा शब्दागमे । ]

**२७ अपयट्ठो पोग्गलो परस्सेव सांणिज्झं गच्छेज्जा, वायरणे वि तहेव ।**

[अपदस्थः पुद्गलः परस्यैव सांनिध्य गच्छति, व्याकरणेऽपि तथैव । ]

**२८ तुम्हाणं अंतियं गंतूण वि अप्पा सरूवं णो परिच्चयइ सद्दाणुसासणम्मि वि एमेव दीसेइ ।**

[युष्माक अन्तिकं गत्वापि आत्मा स्वरूपं न परित्यजति, शब्दानुशासनेऽपि एवमेव दृश्यते । ]

**२६ केवि अहमा सजाइयाणं विणासमेव इच्छंति, वायरणे वि इत्थं दीसेइ ।**

पदान्ते वर्तमानस्य हल स्थानेऽअनुनासिके परे स्थानिन स्वोऽनुनासिको भवति वा । वाङ् मधुरा, वाग् मधुरा ।

पा० परोऽनुनासिकेऽनुनासिको वा ८।४।४५ ।

२७ शा० म्ना जय्यपदान्ते १।१।१०९ ।

मकारनकाराणामपदान्ते वर्तमानाना जयि परे तन्निमित्त स्वोऽनुनासिकादेशो भवति । गन्ता । शङ्किता ।

पा० नश्चापदान्तस्य झलि ८।३।२४ ।

२८ शा० सम्राट् १।१।११३ ।

समित्यस्य राजतौ क्विबन्ते परेऽनुस्वाराभावो निपात्यत । सम्राट् ।

पा० मो राजि सम क्वौ ८।३।२५ ।

२९ शा० ढ्रौ ढ्रि १।१।१३१ ।

[ केऽपि अधमा' स्वजातिकानाम विनाशमेव इच्छन्ति व्याकरणेऽपि इत्थं दृश्यते । ]

**३० सासणेस ! वायरणम्मि हलक्खराणं व तुमए वि लेस्साणं विपरिणामो दरिसिओ ।**

[शासनेश ' व्याकरणे हलक्षराणामिव त्वयाऽपि लेश्यानां विपरिणामो दर्शित. ।]

ढकारस्य रेफस्य च यथासंख्य ढकारे रेफे च परे लुग् भवति। लीढम् । गूढम् । अग्नी रथेन । अन्ता रौति ।

हलो यमो यमि वा १।१।१३२ ।

हल परस्य यमो यथासख्य यमि परे लुग् वा भवति । आदित्य' ।

जरि जर स्वे वा १।१।१३३ ।

हल परस्य जर स्वे जरि परे लुग् भवति वा । भिन्त भिन्त्त ।

पा० ढो ढे लोप ८।३।१३ ।

रो रि ८।३।१४ ।

हलो यमा यमि लोप ८।४।६४ ।

झरो झरि सवर्णे ८।४।६५ ।

३० शा० श्चौ श्चू स्त्वो १।१।१३७ ।

सकारे शकारे चवर्गे च उपश्लिष्टस्य स्थाने शकारादेशो भवति, तवर्गस्य चवर्ग । तपश्चरति । यशश्छत्रम् । भृज्जति । तच्चरति ' नज्जयति ।

ष्टो ष्टू १।१।१३८।

सकारस्य षकारे टवर्गे च उपश्लिष्टस्य षकारो भवति. तवर्गस्य टवर्ग । कष्षण्ड । नट्टीकते ।

जशो हो झष् वा १।१।१४३ ।

पदान्ते वर्तमानाज्जशः परस्य हकारस्य यथासंख्य झषादेशो भवति —अज्झलौ ।

**शश्छोऽमि ।१।१।१४४ ।**

पदान्ते वर्तमानाज्जश उत्तरस्य अमि परे छकारो भवति वा । तच्छोभते । तच्शोभते ।

**३१ सज्जणेहिं संगओ दुट्ठो जणो तारिसो होइ, से जहा वागरणे।**

[ सज्जनैः सगतो दुष्टो जनः तादृशो भवति तद्यथा व्याकरणे। ]

**३२ जत्थ तत्थ साहुणो मित्ताइंव उवट्ठिया होंति, सद्दसासणे जहा आगमा।**

[ यत्र तत्र साधवो मित्राणीव उपस्थिता भवन्ति, शब्द-शासने यथा आगमाः। ]

**३३ पोग्गलो नानारूवेसु विपरिणमेज्जा, तहा सद्दागमे वि।**

पा० स्तो श्चुना श्चु ८।४।४०।
छ्टुना ष्टु ८।४।४१।
झयो हो अन्यतरस्याम् ८।४।६२।
शश्छोऽटि ८।४।६३।
छत्वममीति वाच्यम् वा० ५०२५।

३१ शा० लि ल १।१।१४२।

पदान्ते वर्तमानस्य तवर्गस्य स्थाने लकारे परे लकारादेशो भवति। तल्लुनाति।

पा० तोर्लि ८।४।६०।

३२ शा० ङणो गक् डक् शरि १।१।१४५।

पदान्ते वर्तमानयोर्ङकारणकारयो शरि परे यथासख्यं गक् डक् इत्येतावागमौ स्त। क्रुङ्क्छेते। कुङ्क्शेते। सुगणट्छेते। सुगणट्शेते।

पा० ङ्णो कुक्टुक् शरि ८।३।२८।

३३ शा० नश्शि जक् १।१।१४७।

[ पुद्गलो नानारूपेषु विपरिणमते, तथा शब्दागमेऽपि । ]

**३४ पोग्गलो मिव अप्पावि अन्नेहिं संगओ विविहाइं रूवाइं धारेइ, जहा सद्दसत्थम्मि विसग्गो ।**

[ पुद्गल इव आत्मा अपि अन्यैः संगतः विविधानि रूपाणि धारयति यथा शब्दशास्त्रे विसर्गः । ]

---

पदान्ते वर्तमानस्य नकारस्य शकारे परे जगागमो वा भवति । भवाञ्च्छेते । भवाञ्च्शेते । भवाञ्शेते ।

पा० शि तुक् ८।३।३१ ।

३४ शा० र पदान्ते विसर्जनीय १।२।६७ ।

रेफस्य पदान्ते वर्तमानस्य विसर्जनीयादेशो भवति । सजूः ।

पा० खरवसानयोर्विसर्जनीय ८।३।१५ ।

शा० विसर्जनीयस्य १।१।१६१ ।

विर्जनीयस्य अषि परे रेफो भवति । मुनिरस्मि । पतिर्दयते ।

शरि वा १।१।१६४ ।

विसर्जनीयस्य अशर्परे शरि शकारो वा भवति । कश्शोभते । कः शोभते ।

कुपौ ᳵक ᳶपम् १।१।१३६ ।

विसर्जनीयस्य कवर्गीये पवर्गीये च अशर्परे खयि ᳵक ᳶप इति जिह्वामूलीयोपध्मानीयौ यथासंख्यमादेशौ वा स्त । क ᳵकरोति । कः करोति । अन्त ᳶपचति । अन्तः पचति ।

पा० ससजुषो रु ८।२।६६ ।

वा शरि ८।३।३६ ।

कुप्वो ᳵक ᳶपौ च ८।३।३७ ।

३५ भगवं ! वागरणंसि जहा 'संयोगान्तस्य लुग्' भवति, सव्वेसिं सजोगाणं अंतकरणाउ तहेव तुम्हेहि वि निव्वाणं अहिगयं ।

[ भगवन् ! व्याकरणे यथा संयोगान्तस्य लुग् भवति सर्वेषां संयोगानामन्तकरणात् तथैव युष्माभिरपि निर्वाण-मधिगतम् । ]

३६ वीयराग ! दीणा वि कयाचण नरवर-आईणं ठाणाइं गेण्हिहंति, मद्दाणुमामणे जहा विभत्तीणं आएसा ।

---

३५ शा० पदस्य १।२।९२ ।

संयोगान्तस्य पदस्य लुग् भवति । श्रीमान् । श्रेयान् ।

पा० संयोगान्तस्य लोपः । ८।२।२३ ।

३६ शा० ङसाम्येस्स्येनाद्यम् १।२।१६५ ।

अकारात्परेषां ङस्-आ-असि-ए-इत्येतेषां सुपां यथाक्रमं स्य-इन-आत्-य-इत्येते आदेशा भवन्ति । धनस्य । धनेन । धनात् । धनाय ।

सर्वादेङ्यंस्ये स्मिन्-स्मात्-स्मै १।२।१६६ ।

अकारान्तस्य सर्वादेर्गणस्य सम्बन्धिनां ङि-असि-ए-इत्येतेषां सुपां यथाक्रमं स्मिन्-स्मात्-स्मै-इति आदेशा भवन्ति । सर्वस्मिन् । सर्वस्मात् । सर्वस्मै ।

झोऽन्त १।४।८८ ।

धातोर्लादेशस्य झ अन्तो भवति । भवन्ति । एधन्ते ।

थास से १।४।९५।

टितो ल थास से भवति । एधसे ।

पा० टाङसिङसामिनात्स्याः ७।१।१२ ।

ङेर्यः ७।१।१३ ।

[ वीतराग ! दीना अपि कदाचन नरपत्यादीनां स्थानानि गृह्णन्ति, शब्दानुशासने यथा विभक्तीनामादेशाः । ]

**३७ भंते ! तुव दंसणेण मिच्छत्ताइणो भावा न चिट्ठंति जहा सद्दागमम्मि डकाराणुबंधं दट्ठूण अंतस्सरा ।**

[ भदन्त ! तव दर्शनेन मिथ्यात्वादयो भावा न तिष्ठन्ति यथा शब्दागमे डकारानुबन्धं दृष्ट्वा अन्त्यस्वराः । ]

**३८ भगवं ! तुमए सव्वहा कीवत्तणं विणासियं जओहि तं लहुत्ताए कारणं, जहा वागरणम्मि वि ।**

[ भगवन् ! त्वया सर्वथा क्लीबत्वं विनाशितम्, यतो हि तल्लघुतायाः कारणं, यथा व्याकरणेऽपि । ]

सर्वनाम्नः स्मै ७।१।१४।
ङसिङ्योः स्मात्स्मिनौ ७।१।१५ ।
झोऽन्तः ७।१।३।
थासः से ३।४।८० ।

३७ शा० ङित्यन्त्याजादेः १।२।१०७ ।
अचां सन्निविष्टानां योऽन्त्योऽच् तदादेः शब्दस्वरूपस्य ङिति परे लुग् भवति । मुनौ । साधौ । पिता । माता ।
पा० टेः ६।४।१४३ ।

३८ शा० नपोऽचो ह्रस्वः १।२।१ ।
अजन्तस्य नपुंसकस्य ह्रस्वो भवति । सोमपम् । सोमपे । सोमपानि ।
पा० ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७ ।

**३९ वीर ! तुज्झ सरणमागयो निब्बलो वि बलवंतो जायइ, सद्दाणुसासणे वि एवं दीसेइ ।**

[ वीर ! तव शरणमागतो निर्बलोऽपि बलवान् जायते, शब्दानुशासनेऽपि एवं दृश्यते । ]

**४० दढे अप्पाणम्मि कोवि विआरो न जायइ, वायरणे जहा अव्वयम्मि ।**

[ दृढे आत्मनि कोऽपि विकारो न जायते, व्याकरणे यथा अव्यये । ]

**४१ सव्वत्थ पहाणा एव पढमत्तं लभंते णो उण अप्पहाणा, से जहा सद्दागमस्स कारगपयरणम्हि ।**

---

३९ शा० आस्स्यन १।२।१११ ।

पथ्यादीना सकारादौ श्यनप्सुटि परे अत आकारो भवति । पन्था । मन्था ।

पा० पथिमथ्यृभुक्षामात् ७।१।८५ ।

शा० द्यौ १।२।११२ ।

दिविति अव्युत्पन्नस्य तत्सम्बन्धिनि अन्यसम्बन्धिनि वा सकारादौ श्यनप्सुटि परे औकारादेशो निपात्यते । द्यौ ।

पा० दिव औत् । ७।१।८४ ।

४० शा० अव्ययस्य १।२।१५४ ।

अव्ययस्य सम्बन्धिन सुप ल्लुक् भवति । स्व । उच्चै । नीचै ।

पा० अव्ययादाप्सुप २।४।८२ ।

४१ कारकप्रकरणे । सर्वत्र प्रधाने प्रथमैव भवति यथा हि—

शा० कर्मणि १।३।१०५ ।

[ सर्वत्र प्रधाना एव प्रथमत्वं लभन्ते न पुनः अप्रधानाः तद्यथा शब्दागमस्य कारकप्रकरणे । ]

क्रियाविषये अप्रधाने कर्मणि द्वितीया भवति । घट करोति । प्रधाने तु घट क्रियते ।

हेतुकर्तृकरणेत्थम्भूतलक्षणे १।३।१२८ ।

एषु अप्रधानेषु वर्त्तमानात् तृतीया भवति । धर्मेण सुखम् (हेतो) प्रधाने तु धर्म सुखस्य हेतु । चैत्रेण क्रियते कट. ( कर्तु· ) प्रधाने तु चैत्र· कट करोति । कुठारेण वृश्च्यते वृक्ष ( करणस्य ) प्रधाने तु वृश्च्यते अनेन इति वृश्चन कुठारादि· ।

ङेभ्यांभ्यस १।३।१३५ ।

देर्थंराप्येऽप्रधानेऽर्थे वर्तमानादेकद्विबहुषु यथासख्य ङे-भ्या-भ्यसो भवन्ति । विप्राय गा ददाति । प्रधाने तु दानीय. ( दीयतेऽस्मै इति ) ।

अपायेऽवधौ १।३।१५६ ।

अपायो विश्लेष ।

तस्मिन्निर्दिष्टे योऽवधिरप्रधान तस्मिन ङसि-भ्यां भ्यसो भवन्ति । वृकेभ्यो बिभेति । प्रधाने तु भीम ( बिभेति अस्मादिति )

आधारे १।३।१७६ ।

क्रियाश्रयस्य कर्तु ।

कर्मणो वा य आधार अधिकरण तस्मिन् अप्रधाने सप्तमी । स्थाल्याम्पचति । प्रधाने तु आसनम् (आस्यतेऽस्मिन्) ।

पा० कर्मणि द्वितीया २।३।२ ।

हेतौ २।३।२३ ।

कर्तृकरणयोस्तृतीया २।३।१८ ।

इत्थभूतलक्षणे २।३।२१ ।

चतुर्थी सम्प्रदाने २।३।१३ ।

**४२ संताणं संतेहि एव संगई समुचिता, सद्दसत्थम्मिवि एमेव दीसेइ।**

[ सता सद्भिरेव संगतिः समुचिता, शब्दशास्त्रेऽपि एवमेव दृश्यते। ]

**४३ अप्पहाणभावमावण्णस्स कस्स वि ण चिट्ठइ गारवं जहा सद्दसत्थे।**

[ अप्रधानभावमापन्नस्य कस्यापि न तिष्ठति गौरवं यथा शब्दशास्त्रे ]

**४४ नाणवुड्ढ-वयवुड्ढाणं मज्झे नाणवुड्ढा एव पुव्वं ठविउं अरिहा वागरणम्हि जहा विसेसणाईणि।**

अपादाने पञ्चमी २।३।२८।

सप्तम्यधिकरणे च २।३।३६।

४२ शा० सुप्सुपा समासो बहुलम् २।१।१।

सुबन्त सुबन्तेन सह समाससञ्ज्ञ भवति बहुलम्। व्यक्तपटु।

पा० सह सुपा २।१।४।

४३ शा० न्यग्गोष्यतोऽनशीयो बहुव्रीहेर्ह्रस्व।२।१।१७३।

न्यगप्रधान यो गो शब्द यश्च ष्यत्-स्त्रीप्रत्ययस्तदन्तस्य समासस्य ह्रस्वो भवति नाशिसमासस्य ईयसन्तस्य च बहुव्रीहे। चित्रगु। रूपवद्भार्य.।

पा० गोस्त्रियोरुपसर्जनस्य १।२।४८।

एकविभक्तावषष्ठयन्तवचनम्। वा० ६०७३।

४४ शा० विशेषण सर्वादिसख्य बहुव्रीहौ २।१।११०।

विशेषण सर्वादिसख्यावाचि च शब्दरूप बहुव्रीहौ समासे पूर्व प्रयोक्तव्यम्। चित्रगु। कण्ठेकालो यस्य स कण्टेकाल शिव।

[ ज्ञानवृद्धवयोवृद्धयोर्मध्ये ज्ञानवृद्धा एव पूर्व स्थापयितुमर्हा:, व्याकरणे यथा विशेषणादीनि ]

**४५ अणीइवरोरण्णा पयाहि सह संपक्कं नाधिगच्छइ जहा खेवट्ठे किं सद्दस्स जोगे को वि सद्दो 'समासान्तविधिं' ण पावेइ ।**

[ अनीतिपरो राजा प्रजाभिः सह सम्पर्कं नाधिगच्छति यथा क्षेपार्थे किं शब्दस्य योगे कश्चिदपि शब्दः समासान्तविधिं न प्राप्नोति ]

**४६ हीणविरियाणं समासो वि णो पसंसणिज्जो, जहा सद्दाणुमासणे, पात्रेसमिता इच्चाइ सद्दा गरिहमेव बोधेंति ।**

[ हीनवीर्याणं समासोऽपि न प्रशंसनीयः यथा शब्दागमे पात्रेसमिता इत्यादयः शब्दा गर्हामेव बोधयन्ति ]

पा० सप्तमी विशेषणे बहुव्रीहौ २।२।३५।
सर्वनामसंख्ययोरुपसंख्यानम् । वा० १८१९।

४५ शा० किम क्षेपे ४।१।१२६।

क्षेपे निन्दाया य किंशब्द तस्मात् परेभ्य ऋगादिभ्य समासान्तो न भवति । किंराजा नीतिवर्जित । किंसखा शाठ्यवान् भुवि । किंगो अवाहक ।

पा० किम क्षेपे ५।४।७०।

४६ शा० पात्रेसमितादयश्च २।१।५७।

पात्रेसमितादय सप्तमीतत्पुरुषा निपात्यन्ते क्षेपे । पात्रे समिताः (पात्रे—भोजनकाले एव सगता नतु कार्यकाले)

पा० पात्रे समितादयश्च २।१।४८।

**४७ लहुणा संगओ महन्तो वि अप्पणो महप्पं छड्डेइ, वायरणे वि एवामेव ।**

[ लघुना संगतो महानपि आत्मनो माहात्म्यं त्यजति, व्याकरणेऽपि एवमेव ]

**४८ तुल्लगुणा नाणदंसणादिणो परोप्परं समासमावज्जंति णो उण पढमत्तं बितीयत्तं पुव्वापरत्तं वा लभंते, एवामेव सद्दसत्थे वि ।**

[ तुल्यगुणाः ज्ञानदर्शनादयः परस्परं समासमापद्यन्ते न पुनः प्रथमत्वं द्वितीयत्वं पूर्वापरत्वं वा लभंते एवमेव शब्दशास्त्रेऽपि ]

**४९ महंतो एव पुव्वट्ठिइं लहेइ न उण लहू, वायरणपयोगा वि एवामेव ।**

---

४७ शा० निन्द्योऽपापाणकेन २।१।६२।

निन्द्यवाचि सुबन्तमेकार्थं 'पाप-अणक' इत्येतद्वर्जितेन निन्दावाचिना सुपा समस्यते । वैयाकरणखसूचि ( निष्प्रतिभो वैयाकरण )

पा० कुत्सितानि कुत्सनै २।१।५३।

पापाणके कुत्सनै २।१।५४।

शा० वर्णैर्वर्ण २।१।७७ ।

वर्णविशेषवाचि विशेषवाचिविशेषण सुबेकार्थं वर्णविशेषवाचिना विशेष्येण सुपा समस्यते वा सच समासस्तत्पुरुष । शुक्लकृष्ण । कृष्णशुक्ल ।

पा० वर्णो वर्णेन २।१।६९ ।

४९ शा० वर्णभ्रात्रनुपूर्वम् २।१।१२० ।

वर्णो भ्राता च द्वन्द्व पूर्व पूर्व प्रयोक्तव्य । ब्राह्मणक्षत्रियौ। भीमार्जुनौ।

[ महानेव पूर्वस्थितिं लभते, न पुनर्लघुः; व्याकरण-प्रयोगा अपि एवमेव ]

**५० पुव्वट्ठिइं लद्धुं अरिहा वि जीवा कम्मेहि कयाचण पच्छाट्ठिइंप विंति सद्दसत्थम्मि जहा राजदन्तादयः।**

[ पूर्वस्थितिं लब्धुमर्हा अपि जीवाः कर्मभिः कदाचन पश्चात्स्थिति प्राप्नुवन्ति शब्दशास्त्रे यथा राजदन्तादयः। ]

**५१ अन्नुन्नं भिन्नसहावा वि नेहेणं एकरूवत्तं संपत्ता दीसेंति, जहा वायरणे।**

[ अन्योऽन्यं भिन्नस्वभावा अपि स्नेहेन एकरूपत्वं सम्प्राप्ता दृश्यन्ते, यथा व्याकरणे। ]

---

पा० वर्णभ्रात्रानुपूर्वम्। वा० १४१५।

भ्रातुर्ज्यायस.। वा० १४१६।

५० शा० राजदन्तादौ २।१।१०९।

राजदन्तादौ समासगणे अप्राप्तपूर्वनिपातन पूर्वं निपतति। दन्तानां राजा राजदन्त। वनस्याग्रे अग्रेवनम्।

पा० राजदन्तादिषु परम् २।२।३१।

५१ शा० भ्रातृपुत्रा स्वसृदुहितृभि २।१।८४।

भ्रात्रर्थस्य स्वस्रर्थेन सहोक्तौ भ्रात्रर्थः पुत्रार्थस्य दुहित्रर्थेन सहोक्तौ पुत्रार्थ एव एक प्रयुज्यते। भ्राता च स्वसा च भ्रातरौ।

पा० भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १।२।६८।

शा० पिता मात्रा वा २।१।८५।

पितृशब्दस्य मातृशब्देन सहोक्तो पितृशब्द एव एकः प्रयुज्यते। माता च पिता च पितरौ।

पा० पिता मात्रा १।२।७०।

**५२ गुणा एव सव्वत्थ पूयं लहंते, नय लिंगं णावि वयो, सद्दागमे वि तहेव ।**

[ गुणा एव सर्वत्र पूजां लभन्ते नच लिगं नापि वयः शब्दागमे अपि तथैव ]

**५३ सिद्धेसु अणंतेसु वि एग एव सिद्ध इइ वुच्चइ सद्दसत्थे तहेव ।**

[ सिद्धेषु अनन्तेष्वपि एक एव सिद्ध इति उच्यते, शब्दशास्त्रेऽपि तथैव । ]

**५४ समासहेउणा अणेगेसु वि एकत्तं दीसेइ, से जहा सद्दसत्थे ।**

---

५२ शा० ग्राम्यद्विखुरसघेऽशिशौ स्त्री प्राय २।१।९०।

ग्राम्या ये द्विखुरा पशव तेषा सघेऽशिशौ अतरुणस्य सम्बन्धिनि स्त्री पुरुषाणा सहोक्तौ प्राय स्त्रीवाची एव एक प्रयुज्यते अनन्यार्थप्रकृतौ । गावश्च इमे गावश्च इमा –इमा गाव ।

पा० ग्राम्यपशुसघेष्वतरुणेषु स्त्री १।२।७३ ।

अनेकशफेष्विति वाच्यम् ( वा० ) ८०५ ।

५३ शा० समानामेक २।१।८१ ।

समानाना तुल्यार्थाना शब्दानामर्थस्य सहवचने तेषामेक एव प्रयोक्तव्य वक्रश्च कुटिलश्च इति वक्रौ कुटिलौ वा ।

पा० सरूपाणामेकशेष एकविभक्तौ १।२।६४।

विरूपाणामपि समानार्थानाम् (वा) ७८७ ।

५४ शा० सेनाङ्गक्षुद्रजन्तुषु २।१।९८ ।

सेनाया अगानि अवयवा क्षुद्रजन्तवोऽल्पकाया प्राणिन आनकुलस्मर्यन्ते । रथाश्वम् । यूकालिक्षम् । दशमशकम् ।

[ समासहेतुना अनेकेष्वपि एकत्वं दृश्यते तद्यथा शब्दशास्त्रे । ]

**५५ खमासमण ! तुम्हाणं समोसरणे निच्चवेरिणोत्ति वेरभावं छड्डिऊण परोप्परं संगया होंति, एमेव वायरणे।**

[ क्षमाश्रमण ! युष्माकं समवसरणे नित्यवैरिणोऽपि वैर-भाव परित्यज्य परस्पर संगता भवन्ति एवमेव व्याकरणे । ]

**५६ पोग्गलदव्वस्स लीला विचित्ता से जहा वायरणम्हि पृषोदरादयः ।**

[ पुद्गलद्रव्यस्य लीला विचित्रास्तद्यथा व्याकरणे पृषोदरादयः । ]

---

पा० द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२।

क्षुद्रजन्तव २।४।८ ।

५५ शा० नित्यवैरावैरे २।१।१०३ ।

नित्य सदा वैरो द्वेषो येषा तदवयवो द्वन्द्वो वैरे एकार्थो भवति अभेदे । देवासुरम् । अहिनकुलम् ।

पा० येषा च विरोध शाश्वतिक २।४।९ ।

५६ शा० पृषोदरादय २।१।१७२।

पृषोदरादय शब्दा साधवो वेदितव्या । पृषोदर. । अश्वत्थ. । पिशाच ।

वर्णागमो गवेन्द्रादौ सिहे वर्णविपर्यय ।

षोडशादौ विकार स्यात् वर्णनाश पृषोदरे ।।

पा० पृषोदरादीनि यथोपदिष्टम ६।३।१०९ ।

**५७ सामि ! तुज्झ थुइए असइं उच्चारिया वि सद्दा न दोसाए से जहा सद्दागमे ।**

[ स्वामिन् ! तव स्तुतौ असकृदुच्चारिता अपि शब्दा न दोषाय तद्यथा शब्दागमे । ]

**५८ सासणपवट्टग ! तुम्हाओ सव्वे वि धम्मा पवट्टंति जहा सद्दसत्थम्मि सव्वेवि अवच्चपच्चया आइपुरिसाओ होंति ।**

[ शासनप्रवर्तक ! युष्मत्तः सर्वेऽपि धर्माः प्रवर्त्तन्ते यथा शब्दशास्त्रे सर्वेऽपि अपत्यप्रत्यया आदिपुरुषात् भवन्ति । ]

**५९ हेमवईणं नईणं जहा हिमवन्तो पभवट्ठाणं तमवि तहेव सव्वासिं विज्जाणं सत्तीणं य बीजमसि, वायरणे वि एरिसा पयोगा दीसंति ।**

---

५७ शा० सम्भ्रमेऽसकृत् २।३।१ ।

आशुप्रतिपादन सम्भ्रम प्रयोक्तुस्त्वरण तस्मिन् द्योत्ये यत्पद वाक्य वा नदनेकवार प्रयुज्यते–अहिरहिरहि· । बुध्यस्व बुध्यस्व ।

पा० सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्ध (वा०) ५०५६ ।

५८ शा० आद्यात् २।४।१९ ।

अपत्ये य प्रत्यय स आद्यात्परमप्रकृतेरेव नानन्तरवृद्धयुवभ्यः । उपगोरपत्य औपगव , औपगवस्यापि औपगव , औपगवेरपि औपगवः ।

पा० एको गोत्रे ४।१।९३ ।

५९ शा० हैमवती गगा, काश्मीरी वितस्ता—आदय प्रयोगाः "प्रभवति ३।१।१६६ ' इति सूत्रेण निष्पद्यन्ते ।

पा० प्रभवति ४।३।८३ ।

[ हैमवतीनां नदीनां यथा हिमवान् प्रभवस्थानं त्वमपि तथैव सर्वासां विद्याना शक्तीनाञ्च बीजमसि, व्याकरणेऽपीदृशाः प्रयोगा दृश्यन्ते । ]

**६० भंते ! तुमं कप्पातीतोऽसि, सद्दागमे जहा निवाता नियमातीया ।**

[ भदन्त ! त्वं कल्पातीतोऽसि, शब्दागमे यथा निपाता नियमातीताः । ]

**६१ अहमाणं संगइए अप्पाणम्मि वि अहमत्तं उप्पज्जेइ महन्ताणं संगइआ महत्तणं य एमेव वागरणंसि वि ।**

[ अधमानां संगत्या आत्मनि अपि अधमत्वमुत्पद्यते महतां संगत्या महत्त्वं च व्याकरणेऽपि एवमेव । ]

---

६० शा० श्रोत्रियो वा छन्दोऽध्यायी ३।३।९२ ।

श्रोत्रिय इति छन्द. शब्दादध्यायिनि श्रोत्रभावश्च निपात्यते । श्रोत्रियश्छन्दोऽध्यायी ।

पा० श्रोत्रियश्छन्दोऽधीते ५।२।८४ ।

६१ शा० वागालाटौ ३।३।१२३ ।

वाच इत्येतस्मात्तदस्यास्तीत्यस्मिन्निति आल-आटौ भवत । वाचालः, वाचाट ।

ग्मिन् ३।३।१२४ ।

वागस्यास्तीत्यस्मिन्निति विषये वाचो ग्मिन् प्रत्ययो भवति । वाग्मी । वाग्वान् ।

पा० आलजाटचौ बहुभाषिणि ५।२।१२५ ।

कुत्सितइति वक्तव्यम् ( वा० ) ३२२३ ।

वाचो ग्मिनिः ५।२।१२४ ।

**६२ एगरस ! उवहिणा अप्पाणम्मि विकारो जायेइ, तहेव सद्दागमे ।**

[ एकरस ! उपाधिना आत्मनि विकारो जायते, तथैव शब्दागमे । ]

**६३ कम्मातीत ! हीणकम्मेहि जीवा हीणंगा एव भवन्ति जहा वायरणे ।**

[ कर्मातीत ! हीनकर्मभिः जीवाः हीनांगा एव भवन्ति, यथा व्याकरणे । ]

**६४ गुणो अहोचितो एव पसंसणिज्जो होइ ण उ सीमं अतिक्कमिऊण सद्दागमंसि वि एमेव दीसेइ ।**

---

६२ शा० दन्त उन्नत. ३।३।१३६।

दन्त शब्दादुन्नतोपाधिकान्मत्वर्थे उरो भवति । दन्ता उन्नता अस्य सन्तीति दन्तुरः ।

पा० दन्त उन्नत उरच् ५।२।१०६ ।

६३ शा० स्वाङ्गाद्धीनाद ३।३।१४१ ।

हीनोपाधिकात्स्वाङ्गाद् अ.प्रत्ययो भवति । हीना वा छिन्ना नासिका अस्यास्तीति नासिक । कर्ण ।

पा० अर्श आदिभ्योऽच् (स्वाङ्गाद्धीनात्) ५।२।१२७।

व्रीहितुन्दादेरिलश्च ३।३।१५६ ।

६४ शा० स्वाङ्गाद्विवृद्धात् ३।३।१५७ ।

स्वाङ्गाद्विवृद्धोधिकात् मत्वर्थे इलश्च ठेनौ मतुश्च भवन्ति । वृद्धौ महान्तौ कर्णौ अस्य स्त इति कर्णिल कर्णिक कर्णी कर्णवान् इत्यादि ।

पा० ( स्वाङ्गाद्विवृद्धौ ) तुन्दादिभ्य इलच्च ५।२।१२७ ।

[ गुणो यथोचित एव प्रशंसनीयो भवति न तु सीमानमतिक्रम्य, शब्दागमेऽपि एवमेव दृश्यते । ]

**६५ लोगम्मि जहा कोवि अक्खमाभावं पयडीकरेइ तहेव सद्दनिगमे वि ।**

[ लोके यथा कोऽपि अक्षमाभावं प्रकटीकरोति तथा शब्दनिगमेऽपि । ]

**६६ संसारम्हि केवि पसंसणिज्जा सहणसीला हवंति इत्थमेव वागरणंसि वि ।**

[ संसारे केऽपि प्रशंसनीया सहनशीला भवन्ति, इत्थमेव व्याकरणेऽपि । ]

**६७ कोवि तिसंकु व मज्झगओ उक्करिस-अवकरिसाणं अन्तरा एव चिट्ठइ, जहा वागरणंसि कोइ पच्चयो ।**

---

६५ शा० शीतोष्णतृप्रावसह आलु ३।३।४९ ।

शीतादेरसहे आलुर्भवति । शीतस्य असह शीतालु । उष्णालुः । तृप्रालु ।

पा० शीतोष्णातृप्रेभ्यस्तदसहने ( वा० ) ३२१७ ।

६६ शा० हिमादेलु सहे ३।३।५०।

हिमशब्दात्तस्य सहे एलुर्भवति । हिमस्य सह हिमेलु ।

पा० हिमाच्चेलु. (वा०) ३२१८ ।

६७ शा० उत्कर्षापकर्षयोर ३।१।८२ ।

उत्कर्षापकर्षयोर्मध्य तत्र वर्तमानाद् मध्यशब्दात् अ प्रत्ययो भवति नात्युत्कृष्टो नात्यपकृष्टो मध्यपरिणामो मध्यो वैयाकरणः । मध्या गुणाः मध्या स्त्री । नातिदीर्घ नातिह्रस्व मध्यप्रमाणम् मध्य काष्ठम् ।

[ कोऽपि त्रिशङ्कुवत् मध्यगत' उत्कर्षापकर्षयोरन्तरा एव तिष्ठति, यथा व्याकरणे कश्चित् प्रत्ययः । ]

**६८ आगमेसु जहा अजोग्गदेसकालविसयंसि अस-ज्झायं उद्दिसिऊण किंचि विधानमत्थि सद्दागमंसि वि एमेव दीसेइ ।**

[ आगमेषु यथा अयोग्यदेशकालविषये अस्वाध्यायमुद्दिश्य किञ्चिद् विधानमस्ति शब्दागमेऽपि एवमेव दृश्यते । )

**६६ जहा लोगंसि अन्नायकारी निंदियो होइ तहेव वायरणम्मि वि ।**

[ यथा लोके अन्यायकारी निन्दितो भवति तथा व्याक-रणेऽपि । ]

---

नातिकृशो नातिस्थूलो मध्य काय ।

पा० अ साम्प्रतिके ४।३।९ ।

६८ शा० अध्यायिन्यदेशकालात् ३।२।७४ ।

अयोग्यदेशकालवाचिन अध्यायिन्यर्थे ठण् भवति । अशुचौ अध्यायी आशुचिक । सान्ध्यिक । श्माशानिक । औल्किक ।

❀ 'चन्द्रसूर्योपरागश्च निर्घातो भूमिकम्पनम् ।
दिग्दाहो गर्जितं विद्युदुल्का सन्ध्योत्सवोऽशुचिः ॥
श्मशानाभ्याश इत्यप्यदेशकालादय स्मृता ।"

पा० अध्यायिन्यदेशकालात् ४।४।७१ ।

६९ शा० दधानेऽवृद्धेर्गर्ह्यो ३।२।२९ ।

तदिति द्वितीयान्तात् वृद्धिशब्दवर्जिताद्दधाने प्रयच्छति ठण् भवति योऽसौ धत्ते स चेद् गर्ह्यो भवति । द्विगुणार्थं द्विगुणमेक तद्दधान द्वैगुणिक ।

पा० प्रयच्छति गर्ह्यम् ४।४।३० ।

**७० केइ गुणा अप्पणो पसिद्धिमेव अवगमेंति, जहा सद्दनये केइ तद्धितपच्चया।**

[ केचित् गुणाः आत्मनः प्रसिद्धिमेव अवगमयन्ति यथा शब्दनये केचित् तद्धितप्रत्ययाः । ]

**७१ वाया कम्मं य पुरिसस्स सीलं सूचेति, जहा सद्दागमंसि ठण्-अञ्-पच्चया ।**

[ वाक् कर्म च पुरुषस्य शीलं सूचयतः, यथा शब्दागमे ठण्-अञ्-प्रत्ययौ । ]

**७२ सच्चसीलादिणो गुणा अप्पाणस्स उक्किट्ठत्तं तहेव अवबोहेति जहा वागरणम्मि संपादनट्ठका ठणादिणो पच्चया ।**

---

७० शा० तेन वित्ते चुञ्चुचणौ ३।३।९३ ।

तृतीयान्तेन विद्याप्रख्याते चुञ्चुचणौ भवत । विद्यया वित्त. विद्याचुञ्चु. । विद्याचण ।

पा० तेन वित्तश्चुञ्चुप्चणपौ ५।२।२६ ।

७१ शा० शीलम् ३।२।६२ ।

प्रथमान्तात् षष्ठयर्थे ठण् भवति प्रथमान्तं चेत् शील स्वभाव. स्यात् । अपूपभक्षण शीलमस्येति आपूपिक । दाधिक. ।

छत्रादेरञ् ३।२।६३ ।

छत्रादिभ्य शीलेर्थे अञ् भवति । छात्र । शैक्ष ।

पा० शीलम् ४।४।६१ ।

छत्रादिभ्यो ण ४।४।६२ ।

७२ शा० सम्पादिनि ३।२।९८ ।

तेनेति तृतीयान्तात् सम्पादिनि अर्थे ठण् भवति । कर्णवेष्टकाभ्यां

( सत्यशीलादयो गुणा आत्मन उत्कृष्टत्वं तथैव अव-बोधयन्ति यथा व्याकरणे सम्पादनार्थकाः 'ठण्' आदयः प्रत्ययाः । )

**७३ अणंतणाण ! तुम्हाणं एगम्मि वि वयणम्मि अणेगे अट्ठा निविट्ठा संति जहा वायरणस्स एगम्मि वि ठणादि पच्चयम्मि ।**

[ अनंतज्ञान ! युष्माकं एकस्मिन्नपि वचने अनेके अर्था निविष्टाः सन्ति यथा व्याकरणस्य एकस्मिन्नपि ठणादि-प्रत्यये । ]

**७४ पयोजणातीत ! संसारट्ठियस्स जीवस्स पच्चेकम्मि**

---

सम्पादि कार्णवेष्टिकम् मुखम् । कर्णवेष्टकाभ्या विशेषेण शोभत इत्यर्थं ।

कर्मवेषाद्य ३।२।९९ ।

कर्मवेषाभ्यां तेन सम्पादिनि यो भवति । कर्मणा सम्पादि कर्मण्यम् । वेष्यो नट ।

पा० सम्पादिनि ५।१।९९ ।

कर्मवेषाद्यत् ५।१।१०० ।

७३ शा० कालात्परिजय्यलभ्यकार्यसुकरे ३।२।१०० ।

कालवाचिनस्तृतीयान्तात् परिजय्ये लभ्ये कार्ये सुकरे चार्थे ठण् भवति । मासिको व्याधि मासेन परिजय्य । अर्धमासिको हस्ती ।

निर्वृत्ते ३।२।१०१ ।

कालवाचिनस्तेन निर्वृत्तेऽर्थे ठण् भवति । अह्ना निर्वृत्त आह्निक कृत्यम् ।

पा० तेन परिजय्यलभ्यकार्यसुकरम् ५।१।९३ ।

तेन निर्वृत्तम् ५।१।७९ ।

७४ शा० प्रयोजनम् ३।२।११७ ।

कज्जम्मि किमवि पयोजणं अवस्सं लक्खिज्जई, एवामेव वागरणस्स अणेगाइं सुत्ताइं पयोजणमेव अवगमेंति।

[ प्रयोजनातीत ! संसारस्थितस्य जीवस्य प्रत्येकं कार्ये किमपि प्रयोजनमवश्यं लक्ष्यते एवमेव व्याकरणस्य अनेकानि सूत्राणि प्रयोजनमेव अवगमयन्ति । ]

७५ सव्वुक्किट्ठ ! संसारम्मि तिविहा पुरिसा दीसंति-उत्तमा, मज्झिमा, अहमा य एवमेव सद्दागमे वि तिविहा सद्दा दिट्ठिपहं ओयरन्ति।

[ सर्वोत्कृष्ट ! संसारे त्रिविधाः पुरुषाः दृश्यन्ते—उत्तमा मध्यमा अधमाश्च, एवमेव शब्दागमेऽपि त्रिविधाः शब्दा दृष्टि-पथमवतरन्ति । ]

प्रथमान्तात्तदस्य प्रयोजनमित्यर्थे ठण् भवति। जिनमह प्रयोजन-मस्येति जैनमहिकम् । नैष्ठिक ।

चूलादिभ्योऽण् ३।२।११९ ।

चूलादिभ्य प्रयोजने अण् भवति । चूला प्रयोजनमस्य चौल कर्म । श्राद्धम् ।

पा० प्रयोजनम् ५।१।१०९ ।

चूडादिभ्य उपसख्यानम् (वा०) ३०७४ ।

७५ गा० तिङश्च प्रकृष्टे तमप् ३।४।७१ ।

तिङन्तात् सुबन्ताच्च प्रकृष्टेऽर्थे स्वार्थे तमप् भवति ।

द्वयोर्विभज्ये च तरप् ३।४।७४ ।

द्वयोरतद्गुणयोर्मध्ये य प्रकृष्ट तस्मिन् विभज्ये विभक्तव्यऽर्थे सुबन्तात् तिङन्ताच्च तरप भवति । शुक्ल शुक्लतर शुक्लतम । पचति पचति-तराम् पचतितमाम् ।

७६ लोगम्मि जहा किंचि कम्मं निंदासूचकं होइ तहेव वायरणे कोवि पच्चयो दीसेइ।

[ लोके यथा किंचित् कर्म निन्दासूचकं भवति तथैव व्याकरणे कोऽपि प्रत्ययो दृश्यते । ]

७७ संसारे केणावि कम्मेण पसंसा सूचिज्जेइ, जहा सद्दाणुसासणे रूपम् पच्चयेणं ।

[ संसारे केनापि कर्मणा प्रशंसा सूच्यते यथा शब्दानुशासने रूप प्रत्ययेन । ]

७८ जहा लोगम्मि काइंचण कुलाइं सिप्पसीलाइं होंति तहेव तद्धितस्स वि केइ पच्चया ।

पा० अतिशायने तमविष्ठनौ ५।३।५५ ।

तिङश्च ५।३।५६ ।

द्विवचनविभज्योपपदे तरबीयसुनौ ५।३।५७ ।

७६ शा० निन्द्ये पाशप् ३।४।७० ।

निन्द्येऽर्थे वर्तमानात् पाशप् भवति । निन्द्यो वैयाकरण· वैयाकरणपाश· । निन्द्या जाया जायापाशा ।

पा० याप्ये पाशप् ५।३।४७ ।

७७ शा० प्रशस्ते रूपप् ३।४।७६।

तिङन्तात् सुबन्तात् च प्रशस्तेऽर्थे वर्तमानात् रूपप् प्रत्ययो भवति । प्रशस्त पचति पचतिरूपम् । प्रशस्तो वैयाकरण वैयाकरणरूम् ।

पा० प्रशसाया रूपप ५।३।६६।

७८ शा० शिल्पम ३।२।५५।

तदिति प्रथमान्तादस्येति षष्ठयर्थे ठण् भवति यत्प्रथमान्त तच्चेत् शिल्प कौशल विज्ञानप्रकर्षो भवति । नृत्त शिल्पमस्येति नार्तिक । वादनिक । मार्दङ्गिक ।

[ यथा लोके कानिचन कुलानि शिल्पशीलानि भवन्ति तथैव तद्धितस्यापि केचित् प्रत्ययाः । ]

**७६ अपुव्वकरणगुणमावण्णो जीवो अपुव्वाओ सत्तीओ पयडी करेइ, जहा वायरणे 'च्वि' पच्चयो अभूय-भावं ।**

[ अपूर्वकरणगुणमापन्नो जीवः अपूर्वाः शक्तीः प्रकटी-करोति यथा व्याकरणे च्वि प्रत्ययः अभूतभावम् । )

**८० अणेगे सप्पुरिसा अप्पणो किंचि वि अट्ठं न**

---

मड्डुकझर्झराद्वाण् ३।२।५६।

मड्डुकझर्झराभ्या तदस्य शिल्पमित्यण् वा भवति । मड्डुकवादन शिल्पमस्य माड्डुक ।

पा० शिल्पम् ४।४।५५ ।

मड्डुकझर्झरादणन्यतरस्याम् ४।४।५६ ।

७९ शा० कर्मकर्तृभ्या प्रागतत्त्वे च्वि ३।४।५५ ।

कृकर्मण भ्वस्तिकर्तुश्च प्राक् पूर्वमतत्त्वे गम्यमाने कृभ्वस्तिभ्याञ्च योगे च्विप्रत्ययो भवति । शुक्लीकरोति पटम् । शुक्लीस्यात् ।

पा० कृभ्वस्तियोगे सम्पद्यकर्तरि च्वि ५।४।५०। अभूततद्भाव इति वक्तव्यम् (वा०) ३३८० ।

८० शा० कुमारी-क्रीडनेयोऽव्ययादिभ्य ३।४।११६।

कुमारी-क्रीडनात् ईयसन्तान् अव्ययादिभ्यश्च स्वार्थे को वा भवति। कन्दुरेव कन्दुक । गोलक' ।

मृदस्तिकः ३।४।१२३ ।

मृद स्वार्थे तिको भवति । मृदेव मृत्तिका ।

वर्णात् कार ३।४।१२६ ।

**धारेंति परं परस्स ममिड्ढिए एव कप्पंति, से जहा सद्दसासणे केवि स-अट्ठिया पच्चया ।**

( अनेके सत्पुरुषा आत्मनः किंचिदपि अर्थं न धारयन्ति परं परस्यैव समृद्धयै कल्पन्ते, तद् यथा शब्दशासने स्वार्थिकाः प्रत्ययाः । )

**८१ सव्वेवि परहियणिरया स-अट्ठविमुहा होंति जहा सद्दागमंसि स-अट्ठिया पच्चया ।**

( सर्वेऽपि परहितनिरताः स्वार्थविमुखा भवन्ति, यथा शब्दागमे स्वार्थिकाः प्रत्ययाः । )

**८२ भगवं ! तुम्हेहि जीव-अजीव-पुण्ण-पावाइं सत्ताइं**

---

वर्णवाचिन. स्वार्थे कारो भवति । अ एव अकार । क एव ककार ।

नामरूपभागाद्धेयम् ३।४।१२८ ।

नामादिभ्य स्वार्थे धेयो भवति । नामैव नामधेयम् ।

पा० अवे क ५।४।२८ ।

यावादिभ्य कन् ५।४।२९ ।

मृदस्तिकन् ५।४।३९ ।

वर्णात् कार ( वा० ) २२२७ ।

भागरूपनामभ्यो धेय ( वा० ) ३३३० ।

८१ शा० प्रज्ञादिभ्योऽण् ३।४।१३२ ।

प्रज्ञादिभ्य स्वार्थे अण् वा भवति । प्रजानाति इति प्रज्ञ । प्रज्ञ एव प्राज्ञ । प्राज्ञी कन्या ।

पा० प्रज्ञादिभ्यश्च ५।४।३८।

८२ शा० दैष्टिकास्तिकनास्तिका ३।२।६१।

दैष्टिकादयस्तदस्येति षष्ठचर्थे ठणन्ता निपात्यन्ते । दिष्टा प्रमाणा-

सहावसिद्धाइं णिरूवियाइं इत्थमेव वागरणे अणेगे पयोगा णिरूविया।

[ भगवन्! युष्माभिः जीवाजीवपुण्यपापानि सत्त्वानि स्वभावसिद्धानि निरूपितानि इत्थमेव व्याकरणे अनेके प्रयोगाः निरूपिताः। ]

---

नुपातिनी मतिरस्य दिष्ट दैव प्रमाणमिव मतिर्यस्य स दैष्टिकः। अस्ति परलोक पुण्यपापमितिमतिर्यस्य स आस्तिकः। एव नास्तीति नास्तिक।

परोवरीणपरम्परीणपुत्रपौत्रीणसर्वान्नीनायानयीनानुपदीनागवीनाद्यश्वीनाद्यप्रातीनसमासमीनसाप्तपदीनम् ३।३।५९।

परोवरीणादय शब्दा खञ्प्रत्ययान्ता यथास्वमर्थविशेषे निपात्यन्ते। पराश्च अवराश्चानुभवन् परोवरीण। पराश्च परतराश्च अनुभवन् परम्परीण। पुत्राश्च पौत्राश्च अनुभवन् पुत्रपौत्रीण. सर्वाणि अन्नानि भक्षयन् सर्वान्नीनो भिक्षु, नियमरहितः। अयानय नेयः अयानयीन शार। अय प्रदक्षिणगमन अनय प्रसव्य। शारि द्यूते। अनुपद बद्धा अनुपदीना उपानत्। पदप्रमाणा इत्यर्थ। आ गो प्रतिपादनात् कारी आगवीनः कर्मकरः। अद्य वा श्वो वा विजनिष्यमाणा अद्यश्वीना गौ। अद्य श्वो वा भविष्यदद्यश्वीन मरणम। एव अद्य वा प्रात वा अद्यप्रातीनं मरणम्। अद्यप्रातीनो वियोग। समा समा गर्भं धारयन्ती समांसमीना गौ। एतेभ्य स्व। सप्तभि पदैरवाप्यं साप्तपदीनं सख्यम्। सप्तपदीन सखा अस्मात् खञ्।

पा० अस्ति नास्ति दिष्ट मति. ४।४।६०।
परोवरपरम्परपुत्रपौत्रमनुभवति ५।२।१०।
अनुपदसर्वान्नायानय बद्धाभक्षयतिनेयेषु ५।२।९।
समासमा विजायते ५।२।१२।
अद्यश्वीनावष्टब्धे ५।२।१३।

**८३ जत्थ कम्मस्स भावस्स य पहाणत्तं तत्थ अप्पणो एव पइट्ठा, ण उण परस्स पोग्गलाइयस्स, सद्दागमे वि एमेव दीसेइ ।**

[ यत्र कर्मणः भावस्य च प्रधानत्वं तत्र आत्मन एव प्रतिष्ठा, न पुनः परस्य पुद्गलादिकस्य, शब्दागमेऽपि एवमेव दृश्यते । ]

**८४ दव्व-भावाणं भावस्स पहाणत्तं ण उण दव्वस्स, जहा वागरणे सद्द-अट्ठाणं अट्ठस्सेव पहाणत्तं दीसेइ ।**

[ द्रव्यभावयोः भावस्य प्राधान्यं न पुनर्द्रव्यस्य, यथा व्याकरणे शब्दार्थयोरर्थस्यैव प्राधान्यं दृश्यते । ]

---

आगवीन ५।२।१५।

साप्तपदीन सख्यम् ५।२।२२

८३ शा० कर्मभावे ४।३।१७।

कर्मणि भावे च विवक्षिते धातोर्लस्तङेव भवति । क्रियते । भूयते ।

पा० भावकर्मणो १।३।१३।

८४ दीप्तिज्ञानेहाविमत्युपसम्भाषोपमन्त्रणे वद

दीप्त्यादिषु विशेषणेषु उपसम्भाषायामुपमत्रणे चार्थे वदतेर्लस्तङो भवति ।

दीप्तौ—वदते विद्वान् स्याद्वादे । दीप्यमानो वदतीत्यर्थ ।

ज्ञाने—वदते विद्वान् वैद्ये । ज्ञात्वा वदतीत्यर्थ ।

ईहायाम्—श्रुते वदते । तद्विषयकमुत्साह वदतीत्यर्थ ।

नानामतिर्विमति तस्याम्—क्षेत्रे विवदन्ते । विमत्या किञ्चिद् भाषन्ते ।

उपसम्भाषायाम्—कर्मकरानुपवदते । उपसान्त्वयति उपालभते वा ।

उपमत्रणे—कुलभार्यामुपवदते । रहसि वशीकरोति इत्यर्थ ।

पा० भासनोपसम्भाषाज्ञानयत्नविमत्युपमत्रणेषु वद १।३।४७।

**८५ अणंतदिट्ठी! तुज्झेहिं एवं निरूवियं जं पगासो अंधयारे विपरिणमेइ एमेव वागरणस्स पच्चया।**

[ अनन्तदृष्टे! युष्माभिरेवं निरूपितं यत् प्रकाशो अन्धकारे विपरिणमते, एवमेव व्याकरणस्य प्रत्ययाः। ]

**८६ अगरिहणिज्जो वि एगेसिं संजोगे गरिहणिज्जो होइ, से जहा वागरणे लट् लकारो।**

[अगर्हणीयोऽपि एकेषां संयोगे गर्हणीयो भवति तद्यथा व्याकरणे लट् लकारः। ]

**८७ वट्टमाणकालिया वि विएणाणाइ संसग्गेण अतीत-कालं अवबोहेति, से जहा सद्दसत्थे।**

---

८५ शा० सोम्येर्ह्वन्याम् १।४।११४।

लेट सि इ मि ए इत्येतेषां यथाक्रम हि उ नि आमि इत्येते आदेशा भवन्ति। लुनीहि। पचतु। पचानि। पचताम्।

पा० सेर्ह्यपिच्च ३।४।८७।

मेर्नि ३।४।८९।

एरु ३।४।८६।

८६ शा० गर्हेऽपिजात्वोर्लट् ४।४।११०।

अपिजात्वोरुपपदयोर्गर्हे गम्यमाने धातोर्लट् भवति। अपि संयतो भवानादाय कृत सेवते। जातु तत्र भवान् हिनस्ति।

पा० गर्हायां लडपिजात्वो ३।३।१४२।

८७ शा० स्मे च लट् ४।३।२१५।

पुरा-स्म-शब्दयोरुपपदयोर्भूतानद्यतनेऽर्थे लट् भवति। पचति स्म। पचति पुरा

पा० लट् स्मे ३।२।११८।

पुरि लुङ् चास्मे ३।१।१२२।

[वर्तमानकालिका अपि विज्ञानादिसंसर्गेण अतीतकालमव-बोधयन्ति, तद्‌यथा शब्दशास्त्रे । ]

**८८ भगवं ! भवारिसा नाणिणो वट्टमाणकालट्ठिया वि भाविकालं अवगमावेंति, सद्दसत्थे वि एवामेव ।**

[भगवन् ! भवादृशा ज्ञानिनो वर्तमानकालस्थिता अपि भाविकालं अवगमयन्ति, शब्दशास्त्रेऽपि एवमेव । ]

**८९ णाणदंसणचरित्तबलेहिं आया सव्वे वि अइक्कमेइ, अट्ठविसेसेहिं वायरणे जहा लेट् ।**

[ ज्ञानदर्शनचरित्रबलैः आत्मा सर्वानप्यतिक्रामति, अर्थविशेषैर्व्याकरणे यथा लेट् । ]

**९० केइ अविम्हयसीले वि परे विम्हयसीले कुव्वंति, जहा वायरणे "यच्च यत्र" उववया लेङ लकारे ।**

---

८८ शा० **पुरायावतोर्लट्** ४।३।२८४।

वत्स्यतीत्येव अनुवर्तते । वत्स्यत्यर्थे वर्तमानाद् धातो पुरायावतो-रव्यययोर्लट् भवति । पुराभुङ्क्ते । पुराऽधीते ।

**पा० यावत्पुरानिपातयोर्लट्** ३।३।४।

८९ शा० **भृशाभीक्ष्ण्ये लेट् तस्मिंस्तथार्थे** ४।४।१३९।

भृशे आभीक्ष्ण्ये चार्थे वर्तमानात् धातोर्लेट् भवति, सर्वलकारापवाद । लुनीहि लुनीहि एव लुनाति लुनीत लुनन्ति । एव अलावीत्, अलाविष्टाम्, अलाविषुः । लविष्यतीत्यादि नेयम् ।

**पा० क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमो** ३।२।४।

**९० शा० चित्रे** ४।४।११७।

**यच्चयत्रयोरुपपदयोश्चित्रे** विस्मये लेङ् भवति । चित्रमिदं यच्च तत्र भवान् अकल्प्य सेवेत । यत्र गुरु प्रतारयेत् ।

[केचिदविस्मयशीलानपि परान् विस्मयशीलान् कुर्वन्ति, यथा "यच्च यत्र" उपपदौ लेङ् लकारे । ]

**९१ केइ अन्नेसिं संजोगेण विसेसत्तं धारेंति सद्दागमे वि "उत अपि" जोगेण जहा लेङ्लकारे ।**

[केचिदन्येषां संयोगेन विशेषत्वं धारयन्ति शब्दागमेऽपि 'उत अपि'योगेन यथा लेङ्लकारः । ]

**९२ सन्तस्स संजोगेणं अप्पाणम्मि विरियं उप्पज्जेइ 'अपि'जोगेण जहा लेङ्लकारे ।**

[सतः संयोगेनात्मनि वीर्यमुत्पद्यते, अपि-योगेन यथा लेङ्लकारे । ]

**९३ केइ स-रूवेण अरिहं पयडीकरेंति जहा सद्दागमे ।**

---

**पा० चित्रीकरणे च** ३।३।१५०।

९१ **शा० बाढेऽप्युते लेङ** ४।४।११९।

बाढार्थयो अपि-उतयो र्धातो. लेङ भवति। अपि कुर्यात्। उत कुर्यात् ।

**पा० उताप्योः समर्थयोर्लिङ** ३।३।१५२।

९२ शा० **सम्भाव्येऽलम्यर्थात्** ४।४।१२०।

सम्भाव्य श्रद्धयेऽर्थे वर्तमानाद् धातोर्लेङ् भवति अलम्यर्थादि-यर्थोश्चेदल भवति। अपि पर्वत शिरसा भिन्द्यात् ।

**पा० सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे** ३।३।१५४।

९३ शा० **तृच्यप् चार्हे** ४।४।१२३।

अर्हे गम्यमाने धातोर्लेङ् भवति तृच्यप् च। भवान् खलु कन्या वहेत्। कन्याया वोढा, भवता खलु कन्या वोढव्या. भवान् एतदर्हति ।

**पा० अर्हे कृत्यतृचश्च** ३।३।१६९।

[ केचित्स्वरूपेण अर्हां प्रकटीकुर्वन्ति, यथा शब्दागमे । ]

**९४ एगे अप्पणो भावेणं सत्तिं अवबोहेंति, से जहा सद्दसत्थे।**

[ एके आत्मनो भावेन शक्तिमवबोधयन्ति तद्यथा शब्दशास्त्र । ]

**९५ एगेसिं हिययम्मि परेसिं कए आसंसणं एव चिट्ठइ सद्दाणुसासणे वि एवामेव दीसेइ ।**

[ एकेषां हृदये परेषां कृते आशंसनमेव तिष्ठति शब्दानुशासनेऽपि एवमेव दृश्यते । ]

**९६ संसारे को वि अहमो अच्चंतावलावसीलो होइ, वागरणे वि एवं दीसेइ ।**

---

९४ शा० शक्तौ लेड् घ्यप् ४।४।१३५।

शक्तौ गम्यमानायां धातोर्लेट् घ्यपौ भवत । भवान् खलु भार वहत् । भवता खलु भार उह्येत । वाह्य वोढव्य· वहनीय —भवान हि शक्त ।

पा० शकि लिङ् च ३।३।१७२।

९५ शा० लिङ् लेडाशिषि ४।४।१३६।

आशिषि गम्यमानाया धातोर्लिङ्लेटौ भवत· । जीयात् । जीयास्ताम् । जीयासु ।

पा० आशिषि लिङ् लोटौ ३।३।१७३।

९६ शा० अत्यन्तापह्नवे लिट् ४।३।२११ ।

अत्यन्तापह्नवे सर्वथाऽपलापे भूतानद्यतने लिड् भवति । कि त्वं कलिङ्गेषु प्रवात्सी ? नाह कलिङ्गान् जगाम ।

पा० अत्यन्तापह्नवे लिड्वक्तव्य (वा०) २७७५ ।

[ संसारे कोऽपि अधमः अत्यन्तापलापशीलो भवति, व्याकरणेऽपि एवं दृश्यते । ]

**९७ अण्णेसिं संजोगेण एगेसु अक्खमा अस्सद्धा य उप्पज्जंति, जहा सद्दसत्थम्मि किंकिलजोगेण अत्थि-अट्ठजोगेण य लृट्लकारे ।**

[ अन्येषां संयोगेनैकेषु अक्षमाऽश्रद्धा चोत्पद्यते, यथा शब्दशास्त्रे किंकिलयोगेन अस्ति-अर्थयोगेन च लृट्लकारे । ]

**९८ अतीतकालिएहिं वि केहिं विण्णाणिहिं अणागतकालो बोहियो, सद्दाणुसासणे वि एवामेव ।**

[ अतीतकालिकैरपि कैश्चित विज्ञानिभिरनागतकालो बोधितः, शब्दानुशासनेऽपि एवमेव । ]

९७ शा० किङ्किलास्त्यर्थयोर्लृट् ४।४।११४ ।

किंकिलशब्दे समुदायेऽस्त्यर्थे च उपपदे अमर्षाश्रद्धयोर्धातोर्लृट् भवति । न क्षमे न श्रद्दधे किंकिल नाम तत्रभवानकल्प्य सेविष्यते ।

पा० किंकिलास्त्यर्थेषु लृट् ३।३।१४६ ।

९८ शा० स्मृत्यर्थेऽयदि लृट् ४।४।२०९ ।

स्मृत्यर्थे उपपदे भूतानद्यतने लृट् भवति न यदि । अभिजानासि देवदत्त काश्मीरेषु वत्स्याम ? अभिजानासि देवदत्त यत्कलिंगेषु अवसाम ?

पा० अभिज्ञावचने लृट् ३।२।११२ ।

न यदि ३।२।११३ ।

९९ एगस्स दंसणस्स वि संसग्गेण कोइ कयाचण सव्वे अतिक्कमेइ, सद्दाणुसासणे वि तहेव ।

[ एकस्य दर्शनस्यापि संसर्गेण कोऽपि कदाचन सर्वान-तिक्रामति, शब्दाऽनुशासनेऽपि तथा । ]

१०० सव्वलक्खणोवेत ! जहा पुरिसस्स सरीरंसि सुभासुभकम्माणं सूयगाइं लक्खणाइं होंति, वायरणे वि तारिसो पच्चयो दीसेइ ।

[ सर्वलक्षणोपेत ! यथा पुरुषस्य शरीरे शुभाशुभकर्म्माणां सूचकानि लक्षणानि भवन्ति, व्याकरणेऽपि तादृशः प्रत्ययो दृश्यते । ]

१०१ जगप्पियामह ! संसारम्मि कोइ पुरिसो जहा स-हावेणं सत्तिं पयडेइ तहेव सद्दाणुसासणे टक् पच्चयो ।

---

९९ शा० माङि लुङ् ४।४।१३७ ।

माङि उपपदे धातोर्लुङ् भवति । सर्वलकारापवाद । तन्मा जनि खपुष्पवत् ।

पा० माङि लुङ् ३।३।१७५ ।

१०० शा० जायापतेर्लक्षणे ४।३।१२० ।

जायापतिभ्यां कर्मभ्या परात् हन्तेर्लक्षणवति कर्तरि टग् भवति । लक्षणं शुभाशुभसूचक तिलकालकादि । जायाघ्नो ब्राह्मण । पतिघ्नी कन्या ।

पा० लक्षणे जायापत्योष्टक् ३।२।५२ ।

१०१ शा० हस्तिकवाटाच्छक्तौ ४।३।१२१ ।

हस्तिकवाटाभ्या पराद् हन्ते शक्तौ गम्यमानाया टग् भवति । हस्तिघ्न.—हस्तिनं हन्तुसमर्थ । कपाटघ्नश्चौर. ।

[ जगत्पितामह ! संसारे कोऽपि पुरुषः यथा स्वभावेन शक्तिं प्रकटयति तथैव शब्दानुशासने टक् प्रत्ययः । ]

**१०२ पुरिसस्स थीए वा आकारो तेसिं वयं बोहेइ ण उण उज्जमं, एमेव सद्दसत्थेवि कयंतस्स अ पच्चयो।**

[ पुरुषस्य स्त्रिया वा आकारः तेषां वयः बोधयति, न पुनरुद्यम, एवमेव शब्दशास्त्रेपि कृदन्तस्य अ प्रत्ययः । ]

**१०३ जहा पुरिसस्स कम्मं वयणं वा सीलं बोहेइ तहेव कयंतस्स 'अ' पच्चयो वि ।**

[ यथा पुरुषस्य कर्म वचनं वा शील बोधयति, तथैव कृदन्तस्य अ प्रत्ययोऽपि । ]

**१०४ अणंतबल ! बलवंतो दुब्बलं वाहेइ, इत्थ सद्द-नये वि दीसेइ ।**

---

पा० शक्तौ हस्तिकपाटयो ३।१।५८

१०२ शा० हृञो वयोऽनुद्यमे ४।३।१२६ ।

कर्मण. परात् हृञो वयसि अनुद्यमे च गम्यमाने अ प्रत्ययो भवति । अस्थिहर श्वा । कवचहर क्षत्रियकुमार । अनुद्यम इति किम् भारहार ।

पा० हरतेरनुद्यमनेऽच् ३।२।९ ।

वयसि च ३।२।१०

१०३ शा० आङि शीले ४।३।१२७ ।

कर्मण परात् शीलेऽर्थे हृञोऽप्रत्ययो भवति आङ उपसर्गे सति । पुष्पाहर । फलाहर ।

१०४ शा० तृ साधुधर्मशीलेषु ४।३।२२२।

[ अनन्तबल ! बलवान् दुर्बलं बाधते, इत्थं शब्दनयेऽपि दृश्यते । ]

**१०५ केई अतीतकालिया वि विण्णाणाइसंसग्गेण वट्टमाणकालं अवबोहेंति, जहा वागरणे ।**

[ केचिदतीतकालिका अपि विज्ञानादिसंसर्गेण वर्तमानकालमवबोधयन्ति ।]

धातोः सति तृ प्रत्ययो भवति साधु धर्म शीलेषु ( इद सामान्य सूत्रम् ) साधौ दान कर्ता । धर्मे जिनर्मचिता । शीले हसिता ।

**गृधिधृषिक्षिप्त्रस क्नु** ४।३।२२६।

गृधादिभ्य सति क्नुर्भवति साध्वादिषु । गृध्नु । धृष्णु । क्षिप्नु । त्रस्नु ।

**सन्भिक्षाशन्स्विन्दिच्छादु** ४।३।२२७।

सनन्तात् भिक्षादिभ्यश्च सति उर्भवति साध्वादिषु । बुभूषु । चिकीर्षु । भिक्षु । एतत्सूत्रद्वय विशिष्टामति ४।३।२२२ तम सूत्र बाधते ।

पा० **आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ३।१।१३४।

**तृन्** ३।२।१३५।

**त्रसि गृधिधृषिक्षिपे क्नु** ३।२।१४०।

**सनाशसभिक्ष उ** ३।२।१६८।

**विन्दुरिच्छु** ३।२।१६९।

१०५ शा० **मतिपूजार्थशीच्छील्यादिभ्य क्त** ४।३।२७९ ।

**सति इति अनुवर्तते । मत्यर्थेभ्य पूजार्थेभ्य शीद्भ्य शीलादिभ्यश्च सत्यर्थे क्तो भवति । राज्ञा मत । राज्ञा ज्ञात । राज्ञा बद्ध ।**

पा० **ञीत क्त** ३।२।१८७ ।

**मतिबुद्धिपूजार्थेभ्यश्च** ३।२।१८८ ।

१०६ महापुरिस ! एगेसिं ठिई सावहमेव होइ ण उण वरट्ठं, जहा सद्दागमे "अनि" पच्चयस्स ।

[ महापुरुष ! एकेषां स्थितिः शापार्थमेव भवति न पुनः वरार्थं, यथा शब्दागमे "अनि" प्रत्ययस्य । ]

१०७ एगे समुच्छेयवाइणो सव्वेसिं वत्थूणं निसेहमेव कहेंति जहा "अलं खलुजोगेण" "क्त्वा" पच्चयो निसेहमेव बोहेति ।

[ एके समुच्छेदवादिनः सर्वेषां वस्तूनां निषेधमेव कथयन्ति यथा अलंखलुयोगेन क्त्वा प्रत्ययो निषेधमेव बोधयति । ]

१०८ केवि पुव्वकालं अणुरुंधिऊण एव पवट्टंति, जहा वागरणे 'त्तवा' पच्चयो ।

[ केऽपि पूर्वकालमनुरुध्यैव प्रवर्तन्ते यथा व्याकरणे क्त्वा प्रत्ययः । ]

---

१०६ शा० नञोऽनि शापे ४।४।१८८ ।

नञो धातोरकर्तरि स्त्रियामनिर्भवति शापे । अगमनिस्ते वृषल भूयात् ।

पा० आक्रोशे नञ्यनि ३।३।११२ ।

१०७ निषेधे अलखलौ क्त्वा ४।४।१६१ ।

अलमि खलौ च उपपदे धातोः क्त्वा भवति निषेधे । अलंकृत्वा । खलुकृत्वा ।

पा० अलखल्वो प्रतिषेधयो प्राचां क्त्वा ३।४।१८ ।

१०८ शा० प्राक्काले ४।४।१४४।

अपरकालेन धातुना एककर्तृकात् प्राक्काले वर्तमानाद् धातोः क्त्वा भवति । भुक्त्वा व्रजति भोजनं पूर्वं पश्चाद् व्रजनम् इत्यर्थः ।

पा० समानकर्तृकयो पूर्वकाले ३।४।२१।

**१०९ एगेसिं जम्म सव्वहा वि णिरट्ठगं होइ जहा वागरणे 'खमुञ्' पच्चयस्स ।**

( एकेषा जन्म सर्वथाऽपि निरर्थकं भवति, यथा व्याकरणे 'खमुञ्' प्रत्ययस्य । )

**११० केवि अहमा केवलं अक्कोसमेव बोहेंति, सद्द-सत्थम्मि जहा खमुञ् ।**

( केऽपि अधमाः केवलं आक्रोशमेव बोधयन्ति, शब्द-शास्त्रे यथा खमुञ् । )

**१११ के वि सप्पुरिसा अप्पणो अवट्ठाणेणं साकल्ल-मेव सूचेंति जहा णम् ।**

( केऽपि सत्पुरुषाः आत्मनोऽवस्थानेन साकल्यमेव सूचयंति यथा णम् । )

॥ इति ॥

**१०९ शा० अन्ययवकथमित्थम कृञोऽनर्थकात्** ४।४।१४६।

अन्यथादिभ्य परात् तुल्यकर्तृकेऽर्थे करोतेरनर्थकात् खमुञ् भवति । अन्यथाकारं भुङ्क्ते । एवकारं भुङ्क्ते । कथकारं भुङ्क्ते ।

**पा० अन्यथैवकथमित्थसु सिद्धाप्रयोगश्चेत्** ३।४।२७।

**११० शा० आप्यादाक्रोशे** ४।४।१४८।

आप्यात् कर्मण परात्तुल्यकर्तृकेऽर्थे करोते खमुञ् वा भवति आक्रोशे गम्यमाने । चोरङ्कारम्—चोरं कृत्वा आक्रोशति ।

**पा० कर्मण्याक्रोशे कृञ खमञ्** ३।४।२५।

**१११ शा० विदृशिभ्य कात्स्न्यें णम्** ४।४।१५०।

कर्मणो विदादिभ्यो दृशेश्च प्राक्काले तुल्यकर्तृकेऽर्थे णम् वा भवति कात्स्न्यें गम्यमाने । अतिथिवेदं भोजयति । कन्यादर्शं वरयति ।

**पा० कर्मणि दृशिविदो साकल्ये** ३।४।२९।

॥ इति ॥

प्रकीर्णक-पुस्तकमालाका चतुर्थ पुष्प

# उमास्वामि-श्रावकाचार-परीक्षा

[ ऐतिहासिक-प्रस्तावना-सहित ]

लेखक

**जुगलकिशोर मुख्तार, 'युगवीर'**

**सरसावा जि० सहारनपुर**

[ग्रन्थपरीक्षा ४ भाग, स्वामी समन्तभद्र, जिनपूजाधिकारमीमांसा, उपासनातत्त्व, विवाहसमुद्देश्य, विवाहक्षेत्रप्रकाश, जैनाचार्योंका शासनभेद, वीरपुष्पाञ्जलि, हम दुखी क्यों हैं, मेरीभावना, अनित्यभावना, महावीरसंदेश, सिद्धिसोपान और सत्साधु-स्मरण-मंगलपाठ आदि अनेक ग्रन्थोंके रचयिता तथा अनेकान्तादि पत्रोंके सम्पादक।]

प्रकाशक

**वीर-सेवा-मन्दिर**

**सरसावा जि० सहारनपुर**

| प्रथमावृत्ति | आश्विन, वीरनिर्वाण सं० २४७० | मूल्य |
| --- | --- | --- |
| ५०० प्रति | विक्रम संवत् २००१ | मूल्य विवेक |
| | सन् १९४४ | |

